# श्रीरामलिङ्गेश्वरस्तवराजः ।



'श्रीविद्वत्कविसार्वभौमे'त्यादिदशबिरुदाङ्कित

श्रीपुल्योमामहेश्वरशास्त्रिविरचितः ।

श्रीमहाविद्यायै नमः ।

# श्रीरामलिङ्गेश्वरस्तवराजः ।

'श्रीविद्वत्कविसार्वभौमे'त्यादिदशबिरुदाङ्कित

श्रीपुल्योमामहेश्वरशास्त्रिविरचितः ।

गुण्टूरुमण्डलस्थतेनालिनगरवास्तव्य-

श्रीमुदिगोण्ड सुब्रह्मण्यशर्मणां

द्रव्यसहकारेण

भट्नविल्लिश्रीशारदामुद्रणालये

मुद्रापितो विजयतां तमाम् ।

विलम्बिसंवत्सरवैशाखे

प्रकाशीकृतः ।



मूल्यम् 0–50

श्रीमुदिगोण्ड सुब्रह्मण्यशर्माभिनन्दन

# पद्यरत्नमाला ।

श्लो॥ श्रीमच्छृङ्गवाढ्यपीठाधिपगुरुमणिनिष्ठ्युद्धटाराध्यवंश
श्रीचूडारत्नसूतीसदनितमुदिगोण्डाख्यगोत्राकरोत्थः ।
कन्यायाख्योरुहीरश्शरभमनुमहोपासनालब्धसिद्धि-
र्विज्ञानी सत्तपस्वी मनुमहिमजगत्सर्वपीडापहारी ॥१॥
यत्सन्दर्शाभिकांक्षिण्युपगतजनताऽऽगारिकद्वारदेशं
पश्यन्ती स्वेप्सिताप्त्यै सदनबहिरवस्थानगा दर्शनेन ।
प्राप्ताभीष्टातितुष्टा बहुतरनुतिभिः प्रत्यगादात्मवासान्
श्रीनर्सारायपेटाधिपतिरुरुतरैर्माननैर्यं पुपूज ॥२॥
तत्पुत्रः कोटिलिङ्गस्सुगुणमणिखनिस्तद्यशोवर्धकोऽभूत्
यस्मै मल्लायपालेंजनपदपतयस्सिङ्गमाख्यान्वयोत्थाः ।
लक्ष्मीशा विष्णुभक्ता अपि च हरिहराभेदभावं वहन्त
स्सीतानाम्नीं स्वकन्यामदुरधिकमुदाऽत्युच्चभूम्या सहायाम् ॥
तत्सूनुर्नागलिङ्गाभिध उरुगुणवान्प्राणलिङ्गार्चनाद्यै
श्शैवोपास्तिप्रभेदैस्सततमपि शिवाराधनायत्तचित्तः ।
अम्बानाम्नीं सुगुण्यां बुधनुतचरितस्साधुवृत्तां सतीभि
स्स्तुत्यां साध्वीललामामुदवहदमलौदार्यमुख्याभिरामाम् ॥४॥
तद्दम्पत्योः कुमारोऽपर इव शिवयोर्नामतोऽपीडयवृत्त
श्श्रीसुब्रह्मण्यशर्मा विमलगुणगणैरभ्युदीतो बुधेन्द्रः
भारद्वाजर्षिगोत्राभरणमिव महौदार्यधैर्यादिधुर्यो
वीर्यं यस्यार्यमार्यादरविधिषु समर्यादमुर्वीशवर्यम् ॥५॥

शौर्यं श्रीशैवसेवास्वनिशमपि मतग्रन्थमार्गानुरोधा-
दौदार्यं दीनरक्षाविधिषु बहुविधार्थानुसन्धानधुर्यम् ।
गाम्भीर्यं भूरिकार्याचरणविधिषु सद्धैर्यमात्मोद्यमेषु
प्रक्रान्तेषून्नतेषु प्रतिभटविजयेष्वप्रधृष्यं च वीर्यम् ॥६॥

श्रीवाणीकीर्तिकान्ताधरणिधृतकरं धर्मपत्न्यन्नपूर्णाऽ
न्वर्थाख्या पञ्चमी साऽवृणुत सुगुणसंलुब्धहृत्साधुवृत्ता ।
चातुर्यं यस्य पञ्च प्रियमरमणीरक्षणे साम्यदृष्ट्या
विद्वद्वर्यप्रशंस्यं समितिषु विदुषां काव्यजाले कवीनाम् ॥

वित्तादानेषु दानेष्वपि च विभजने पात्रतापात्रतादे-
स्त्यागे दीनेषु मुद्रागणनविरहिते नैपुणी विस्मयार्हा ।
सेवन्ते यं तु नित्यं निजविविधबृहत्कार्यसन्धानकामा-
स्सिद्धार्था यं स्तुवन्ति श्रितसुरतरुरित्यर्थिसार्थास्सदापि ॥८॥

यत्पंक्तावन्नपूर्णामृतकरपरिविष्टान्नमश्नन्ति भक्ष्यै-
र्भोज्यैर्लेह्यैश्च चोष्यैरतिथिवरसमभ्यागताश्चापि विप्राः ।
सन्तृप्ता वर्धयन्ते निजविविधशुभाशीर्भिरार्या यदीय
दाम्पत्यं दीनजाता अपि विविधजना अर्थिनोऽनाय हृष्टाः ॥

निष्णाता वेदशास्त्रेष्वपि विविधकलावल्लभाः काव्यकन्या
दातारस्स्वीयगोष्ठीविततिभिरनिशं मोदयन्ते यमार्याः ।
यद्दत्तार्थादितुष्टा यदखिलशुभशतोदीतिकांक्षां वदन्त-
स्स्वीयैः पद्यैश्च गद्यैरहरहरपि यं नोनुवत्यासकामाः ॥१०॥

श्रीमहावांगीश्वर्यै नमः ।

श्रीमहागणाधिपतये नमः ।

# श्रीरामलिङ्गेश्वरस्तवराजः ।

'विद्वत्कविसार्वभौम'

पुल्य उमामहेश्वरशास्त्रिविरचितः ।

श्लो॥ अद्वैतमर्धदेहेन द्वैतं पृथगवस्थितेः ।
दर्शयन्पार्वतीनाथो रामलिङ्गेश्वरोऽवतात् ॥

क्षीरारामक्षेत्रे स्वयमुदितं जगदनुग्रहेच्छया शम्भुम् ।
शिरसि जटामकुटधरं स्फाटिकलिङ्गाकृतिं भजे हृदये ॥२॥

इन्द्रादयोपि दिविजा विविधा मुनीन्द्राः
सायं भवत्सुभगरूपदिदृक्षयेश! ।
आयान्ति हि प्रतिदिनं त्विममालयं ते
स्वार्थेप्सवो भजनतो भवतस्त्वरात्ताः ॥३॥

तद्भक्तलोकसमनुग्रहणाय शम्भो!
योगं विहाय निजलिङ्गतनोः कृपावान् ।
उत्थाय दिव्यवपुषा सुभगेन हर्षात्
नृत्यत्यलं सह गणैः परितस्समाजे ॥४॥

आनन्दताण्डववपुस्तव तन्निरीक्ष्य
तौर्यत्रिकेण बहुधा नुतिभिश्च धन्याः ।
आनन्दबाष्पकलितास्सकला भवन्तम्
सामाजिका उपचरन्ति सदा महेश! ॥५॥

नृत्यत्पदद्वयरवानुकृतार्यगीत-
वाद्यान्वितांगचलनैरुदितो महान्यः ।
आनन्द आत्मसु समाजगतेषु नाद-
तत्त्वानुसन्धिगमितस्स कदा मम स्यात्? ॥६॥

व्याघ्राजिनेन कटिगेन गजाजिनेन
बाहुद्वयोर्ध्वचलता गलगाहिना च ।
नृत्यत्फणेन च जटामकुटस्थगङ्गा-
नृत्यार्जकस्य तव ताण्डवरूपमीडे ॥७॥

नृत्यानेहसि ते सुरूपकलनं लभ्यं सुराणामपि
श्रीयोगेश घटेत नाऽन्यसमये योगार्हलिङ्गानुगे ।
त्वय्यस्मात्किल नृत्यकालमदिशस्त्वद्रूपसन्दर्शने
सर्वेषामपि सर्वसुन्दरवपुस्तत्ते शिवायास्तु नः ॥८॥

ये सायंसमये शिवङ्करहृदः पश्यन्ति मर्त्याश्शिवम्
लिङ्गात्मानमिहामृताशिनिवहाराध्यात्मनृत्योद्यतम् ।
मर्त्या दृश्यमनोहराकृतिजुषं पश्येयुरेनं शिवम्
धन्या अन्यजनाविति स्म मुनयः प्राहुर्महान्तो ध्रुवम् ॥९॥

यद्रूपं तव ताण्डवेषु मुनिभिर्दृष्टं यथा वर्णितम्
तत्ते मादृशमानवाद्यसुलभालोकं मुनीड्यं मुहुः ।
आलम्ब्यात्मनि किंचिदीडितुमशक्तोपि प्रवर्ते शिव!
श्रेयः केन न कांक्ष्यते सकलसच्छ्रेयःप्रदे किं स्तवे ॥१०॥

मूढोऽहं विषयावलीढहृदयः कामाद्यरीणां वशो
विद्यावाप्यविवेकगन्धरहितस्संसारसेवापरः ।
तन्निर्वाहकृतेऽर्थकामचयने नक्तंदिवं व्यापृतो
नानाक्लेशसहिष्णुरप्यहह! ते सेवां न चैवाचरः ॥११॥

एवं संसरतस्सदा बहुविधक्लेशार्जकस्याधुना
विद्युत्स्फूर्तिरिवात्मनीषदमिषच्छम्भो स्वविद्याद्युतिः ।
'मूढ! त्वं श्रय सर्वदं परशिवं सर्वज्ञसर्वेश्वरं
संसाराम्बुधितारिणं, किमपरैस्स त्वां समुत्तारयेत्' ॥१२॥

इत्यन्तस्स्फुरणेन केनचिदहो सर्वज्ञसर्वेश्वरः
क्व क्वाऽहं जडधीस्तदाश्रयणमप्याराद्घटेत क्व वा ।
केन स्याद्विधिनेति चेतसि विकल्प्येह स्तुतौ ते यते
बलालापवदीश मामकगिरस्ते सन्तु मोदावहाः ॥१३॥

श्रीवाणीधरणीविभूतिविलसत्सद्वर्णसङ्घोल्लस-
त्क्षीरारामपुरीकृताधिवसतिश्श्रीरामलिङ्गेश्वरः
पार्वत्या सहितो निजार्धवपुषा सूर्यादिभिस्स्वैः परी-
वारैर्देवगणैर्धृतेतरनिजाभिख्यस्स्वयं नोऽवतात् ॥१४॥

शैवक्षेत्रवरेषु पञ्चसु पवित्रारामसंज्ञेषु य-
न्मूर्धन्यं कथितं शिवस्स्वयमवातारीज्जटाजूटधृत ।
लिङ्गाकारतया सितेन वपुषा स्वीयेन साक्षाज्जग-
द्रक्षायै निजपार्वतीदयितया गोदाख्यगङ्गान्तिके ॥१५॥

पार्श्वे यस्य च दक्षिणे गणपतिस्स्वीयालये संस्थितो
गोकर्णेश्वर आत्मनोऽमलतनुस्तद्दक्षिणेऽत्रातरत् ।
स्कन्दस्तूत्तरभागगोऽस्ति तनयो यस्यालये स्वे ततो
लक्ष्मीश्चापि जनार्दनो निवसतो यस्यालये सुन्दरौ ॥१६॥

सालग्रामशिलामयो निवसति श्रीनन्दिकेशो दिशि
प्राच्यां द्वारयुगं त्वदन्नभिमुखं त्व सेवमानस्सदा ।
यस्याज्ञामनुपेत्य कोपि सदनान्तस्थं शिवं वीक्षितुम्
नो शक्नोति सुरेश्वरोपि मनुजो वाऽन्योपि कुत्रापि वा॥१७

प्राग्द्वारात्तव दक्षिणे निजकरैस्सम्भासयन्नालयम्
सूर्यः पाति ततस्तु दक्षिणतले विश्वेश्वरोऽसि प्रभो ।
तत्पार्श्वे तव पार्वती प्रियतमा सर्वाङ्गसौन्दर्यभा
भ्राता लोकततेस्त्वेश हृदयं याचूचुरद्योगिनः ॥१८॥

यस्या दृष्टिनिपातनानि करुणापीयूषवर्षीण्यलम्
भक्तेभ्योऽखिलकामदानि सततं निर्यान्ति नेत्रद्वयात् ।
फुल्लाम्भोरुहभासुराननसमालोकेन दीनात्मना-
माधिव्याधिमुखव्यथाविलयनादानन्दलीलोदयः ॥१९॥

तत्पार्श्वे नगरेश्वराख्यतनुभृत्त्वं दक्षिणे संस्थितः
श्रीरामहापुरीमत्रसि भोः! प्रेम्णाखिलैश्वर्यदः ।
तत्स्थायै निजभक्तलोकततये कौबेरमख्यं भृशम्
शंसन्स्त्वं सह वीरभद्रतनयेनात्मीयपार्श्वे विभो! ॥२०॥

पश्चाद्दक्षिणदिक्तटे तव विभो या मातृकास्सप्त ता
लोकान्पान्त्यनिशं कृपार्द्रहृदयस्त्वस्था पयो रक्षितुम् ।
आधिव्याधिविपन्नदीनमनसो मर्त्यान्विपद्ध्वंसिनी-
रापन्नार्तिनिवारणे तव कृपाऽनन्यादृशी शङ्कर! ॥२१॥

पश्चाद्दुर्गमदुःखनाशनधृतात्मीयव्रतानारतं
दुर्गा श्रीकनकात्मिका निवसति श्रीरामलिङ्गेश्वर!
निर्देशात्तव भक्तरक्षणकृते ब्रह्मा ततो भारती
पश्चात्त्वद्भजनाय शङ्कर कुमारोऽथात्मजस्त्वां भजन् ॥२२॥

या दुर्गाऽखिलदुर्गतिप्रशमनी लोकस्य, भक्तावलि-
त्राणायावततार दुष्टमहिषाभिख्यासुरं सिंहगा ।
हन्तुं देवगणैरजय्यमभयं दत्तेऽखिलाभीष्टदा
सा चाष्टादशबाहुभिश्शिवसुतात्पश्चादिहास्ते परा ॥२३॥

तस्या उत्तरदिक्तटेऽत्र वसति त्वन्मूर्तियुग्मं विभो
श्रीमत्सुन्दरताण्डवेश्वरपदख्यातं मनोहृन्नृणाम् ।
यद्वीक्षाव्यथितात्मनोऽप्यतितरामानन्दवीचीभ्रम
द्ध्वंसत्वं मनसो विधाय तनुते भक्तिं स्थिरां त्वय्यलम्॥२४॥

यस्याऽत्युग्रतपोविशेषदृढसद्भक्तिप्रतुष्टात्मना
यद्दौवारिकताऽद्भुता पुरमुखे शम्भो त्वया स्वीकृता ।
सोऽयं त्वद्भजनाय बाणदितिजो भक्ताग्रणीस्सन्ततम्
श्रीमत्ताण्डवमूर्तितोऽथ वसति श्रीरामलिंगेश्वर ॥२५॥

दत्तात्रेयवपुर्धरोऽसि भगवन्विज्ञानसिद्धिप्रद-
स्तस्मात्प्राग्दिशि कालभैरवयुतस्स्कन्दस्ततः प्राग्विभो ।
पापघ्नेश्वरनामतोऽसि भगवन्नन्वर्थनामा ततो
द्रष्टॄणां शिव पापभंजक इह श्रीरामलिंगेश्वर ॥२६॥

एवं स्वैः परिवारकैस्सह धृतान्योपाधिनामव्रजै-
र्नानारूपधरस्स्वमूर्तिभिरिह श्रीरामलिंगेश्वर ।
पार्वत्या सहितस्स्वभक्तविततित्राणाय सर्वेश्वर
क्षीरारामपुरेऽतिपूतवसतौ व्यक्तस्स्वयं पासि नून् ॥२७॥

गोः कर्णात्क्वचिदीश कुक्कुटतनोः कुत्रापि वाराङ्गना-
चूडातः क्वचिदीश हिंस्रकमहाव्याघ्रात्क्वचित्ते जनिः ।
चित्रा भक्तजनावनाय बहुधा सर्वात्मतादर्शिनी
श्रीमद्भक्तमनोनिवास भगवन् श्रीरामलिंगेश्वर ॥२८॥

देवास्सन्तु सहस्रशो दिवि नृणामिष्टार्थदास्सेवना
त्सव्यासव्यविधिक्रमोपकलितात्क्षिप्रं प्रसाद्याश्चिरम् ।
तोष्याश्च त्वमुमापते क्षणमुहूर्ताद्यल्पकालानुस-
न्धानप्राप्यकृपार्द्रहृच्छ्रितविपद्ध्वंसयाशुतोषी स्मृतः ॥२९॥

धातृश्रीपतिवासवादिदिविजाः पुंरूपिणोऽभीष्टदा
दीर्घेणेन्द्रियशोषिकृच्छ्रतपसाऽसाध्येन यागादिना ।
त्वं त्वेकाग्रहृदा मुहूर्तमितसत्कालेन निध्यायिनां
भक्तानामखिलार्थदोऽखिलविपद्व्रातात्समुत्तारयन् ॥३०॥

आत्मानं किमितीश लिंगवपुषा संछादयस्यंजसा
नाऽन्ये ब्रह्ममुखास्सुरा इह परं साङ्गैस्स्थिता विग्रहैः ।
मन्येऽहं परमात्मतामुपनिषद्बोध्यां विशुद्धां स्थिरां
स्थाणुत्वेन च सूचयस्यतितरामाद्यन्तहीनामिति ॥३१॥

ज्ञानानन्दमयं स्वमन्तरनिशं लिंगे स्थितो वीक्षसे
धिक्कृत्याऽखिलजागतं नु विकृतव्रातं सदा शङ्कर ।
बाह्यं प्राकृतमेतदीश मलिनं योगापकर्षक्षमं
नैर्गुण्यं स्वगतं व्यनक्षि जगतो लिङ्गात्मना संस्थितः॥३२॥

नैर्गुण्यं गुणनिर्गतेस्तु भवतो नात्यन्तिकाभावत-
स्तत्तद्वैकृतलेपमात्ररहितत्वाशंसकं मन्महे ।
सागुण्यं गुणवैकृताश्रयतया मूर्तेष्वमूर्तेष्वपि
ख्यातं जागतवस्तुषु स्फुटतमं नैतद्विरुद्धं विभो ॥३३॥

'जन्माद्यस्य यतोऽन्वयादितरत' श्चेत्याह पाराशरि-
र्भूतानामुदयं स्थितिं लयमपि त्वत्तश्श्रुतिर्भाषते ।
नैर्गुण्यं गुणशून्यता यदि घटेतान्योन्यविद्विष्टयो-
स्सामानाधिकरण्यमीश्वर कथं तद्धर्मयोर्मन्महे ॥३४॥

धत्तेवार्यविकारिसारसदलं लिप्येत नेषत्तत-
स्सूर्यं भौमरजो न लिम्पति यथा नाकाशमग्न्यादिकम् ।
एवं त्वां प्रकृतिर्न लिम्पति जडा त्वत्सन्निधानाज्जग-
त्कार्याणिं विदधाति देहवदहो जीवात्मसान्निध्यतः ॥३५॥

माया सात्वविकारिणी गुणमयी चिच्छक्तिरूपा त्वयि
ज्योत्स्ना चन्द्रमसीव वारिणि यथा वीचिः प्रभा पूषणि ।
इच्छाज्ञानकृतिस्वरूपकलिता जीवे सुषुप्तौ यथा
कल्पे निश्चलतां गता त्वयि पुनस्सृष्टौ विचित्रक्रिया ॥३६॥

भेदस्तत्र हि यत्पृथग्विषयतामापद्यतेऽन्यात्स्वयम्
यन्नैवं न ततस्तदन्यदिति संविज्ञायते विद्वरैः ।
शक्तेश्शक्तिमतो गुणस्य गुणिनो नैवापृथग्भानतो
मायायास्त्रिगुणात्मनस्तव भिदा शक्तेर्न कापीश्वर ॥३७॥

शक्तिं वाऽन्यगुणान्विहाय भगवन्नात्मा न सन्दृश्यते
नात्मानं च विहाय तेऽत्र सकलं द्रव्यं गुणैरन्वितम् ।
हित्वा द्रव्यमिह स्थितिर्गुणततेः कुत्रापि नालोक्यते
तद्भेदः कृतिभेदजः कृतिकृदप्यात्मा त्वमेवेश्वर ॥३८॥

देहे गेह इवानुविश्य करणैस्तैस्तैर्गुणैश्शक्तितो
नानाकार्यततिं करोषि भगवंस्त्वं जागतीमिच्छया ।
सृष्ट्वा चित्रमिदं जगद्बहुविधं रक्षस्यपि स्वेच्छया
सर्वं संहरसीह नर्तक इव स्वं नाटकं जागतम् ॥३९॥

कर्तृत्वं प्रकृतेर्जडामपि च नामाहुः कथं वा लगे-
द्यत्नात्मा न वसेज्जडस्य उदितो भिन्नश्च यस्त्वात्मना ।
आत्मव्यापृतिमन्तरा न करणेष्वीक्ष्येत कापि क्रिया
कर्तृत्वं तदधिष्ठितेस्तव विभो विद्मोऽखिलव्यापृतेः ॥४०॥

मायोपाधिक! तेऽन्यजीवनिवहस्याविद्यकोपाधिक-
स्याद्वैतं प्रवदन्ति तात्विकबुधास्तन्माधु मन्यामहे ।
राज्ञो भृत्यगणस्य भेदवदिहोपाध्योः प्रभेदात्तथा
शक्तीनां च विभेदतो हर भिदा दृश्येत नैवान्यतः ॥४१॥

नैवोपाधिमृते महोपि भगवन्कुत्रापि सन्दृश्यते
मायां शक्तिमयीमुपाधिमवलम्ब्याग्निर्यथा दाहिकाम् ।
शक्तिं सूक्ष्मतमामनुप्रविशसि स्थूलेषु सर्वेष्वहो!
दार्वादिष्विव लिङ्गदेहमुपयञ्जीवात्मरूपश्शिव ॥४२॥

सृष्ट्यर्थं तव लिङ्गदेहधरणान्नानाक्रियानुष्ठिते-
स्त्वच्छक्तिप्रकृतौ क्रमादधिगतं मालिन्यमस्मादिमाम् ।
श्रीरामेश्वर मन्महेऽखिलबुधा आहुस्त्वविद्यामिति
त्वां जीवं च तदाश्रितं त्रिजगतीस्थूलात्मसंस्थ विभुम् ॥४३॥

इच्छाज्ञानकृतिप्रभृत्यखिलमच्छक्त्यात्ममायामयो
पाधिस्थस्य तवान्तरात्मविरहात्क्वापि क्रिया नो भवेत् ।
तद्राहित्यमवैकृताय निभृतत्वायापि हेतुस्तव
श्रीनन्निष्क्रिय निर्विकार भगवन्नित्यात्ममोद प्रभो! ॥४४॥

जीवेऽन्तःकरणं गुणाश्च विषमाः कर्माणि नानाविधा
न्यन्तश्शतृगणस्स्वभाव इति चाऽविद्यापि शम्भो सदा ।
तत्तद्भौतिकदेहवेशनमुखा नित्या विशिष्टा इमे
श्रीरामेश परात्मरूपरहिते शुद्धस्य निष्कर्मणः ॥४५॥

इच्छाशक्तिविजृम्भणात्प्रथमतस्सृष्टौ निजज्ञानवि
स्फूर्तस्त्रीपुरुषात्मभागकृतिशक्त्याप्तार्धनारीश्वर ।
शुद्धान्तःकरणादिराजितवशीभूतात्ममायाबला-
द्ब्रह्मादीनसृजस्ततोऽखिलजगत्सृष्ट्यादि सर्वेश्वर! ॥४६॥

स्थूलोपाधय ईश! तेऽतिविमलास्सर्वज्ञ सर्वेश्वर
श्रीमायाऽखिलशक्तिरप्यपि वशा विश्वस्य सम्मोहिनी ।
नानाकर्मसु चोदनेन सततं हृत्पुण्डरीकस्थितो
मायाशक्तिनटीयुतो नटयसि त्रेधा जगन्नाटकम् ॥४७॥

आत्मानं प्रविभज्य कार्यभिदया धृत्वा तु मूर्तित्रयम्
स्वीयाभिस्सह शक्तिभिश्शिव नयस्यङ्कत्रयं जागतम् ।
सृष्टिं ब्रह्मवपुस्स्थितिं हरिवपू रुद्रात्मवांस्तल्लयं
नानाऽत्यद्भुतकर्मतत्फलमुखैर्जीवव्रजे सन्ततम् ॥४८॥

मायां स्वां प्रणिधाय सद्यवनिकां लोकालिरङ्गस्थले
स्वस्वप्राक्तनकर्मलब्धविविधाकारान्निधायात्मन ।
तत्तत्कर्मविशेषभोग्यफलसन्धानानुकूलक्रियाभेदै-
र्नर्तयसि त्वमीश बहुधा दुःखं सुखं भोजयन् ॥४९॥

पुण्यं पापमिति द्विधाऽत्र विभजन्कर्माखिलं पुण्यतः
प्राप्तव्यं सुखमीप्सितं बहुविधं दुःखं तु पापात्पुनः ।
एवं वेदमुखात्प्रबोध्य भगवंस्त्वं कर्मसूत्रं दृढं
संस्थाप्यानुगुणं फलं विदधसे प्राणिव्रजस्येश्वर ॥५०॥

आत्माऽभीष्टसुखोपधायककृतिव्रातप्रबोधेपि ते
मायामोहवशाः प्रजा विदधते पापानि घोराण्यपि
तत्र त्वं कुरुषे किमीश फलदः कर्मव्रजस्यात्मनां
बद्धा कर्मफलव्यवस्थितिरियं नित्या विभिन्ना कथम् ॥५१॥

अन्तर्यामितया महेश विविधोपाधिस्थितः कर्मसु
त्वं जीवानिह चोदयन्द्विफलकेष्वामोह्य मायाबलात् ।
श्रीरामेश सुखं ददास्यपि पुनर्दुःखं च तेभ्योद्भुतम्
किन्त्वेतल्ललितं च कीदृगिति नो विद्मो वयं शङ्कर ! ॥५२॥

उद्भिज्जादिजरायुजस्थितमृगान्तोपाधिकात्मव्रजे
धर्माऽधर्मविधार्हताविरहिते प्रारब्धभोगास्पदे ।
हिंसाद्युन्नतदोषकृत्यपि न वा शिक्षां विधत्से क्वचित्
स्वस्वोच्चात्मगतिं ददासि मनुजांस्त्वं शिक्षसे दोषिणः ॥५३॥

स्वातन्त्र्यं सदसत्क्रियाचरणगं दत्तं क्रिया दर्शिता
स्ता वेदैस्सफलास्तदौपयिकमप्यङ्गं सह ज्ञानतः ।
स्वाभीष्टं सुखमर्जयेति गदितेप्येषोऽशुभे वर्तते
चेच्छिक्षे तमितीरणं किमुचितं धीचोदिनस्ते शिव! ॥५४॥

बुद्धीः कर्मसु सत्सु सर्वसुखदेष्वेवात्मनां चोदयेः
किं नेतीश्वर कारणं तु न वयं विद्मो नचाहुः परे ।
दुष्कर्मव्रजचोदनं तदनुगानेकव्यथापादनम्
किं युक्तं शिवदोसि शङ्कर! सदा लोकस्य सर्वेश्वर ॥५५॥

जीवत्वं परमेश्वरत्वमपि ते सोपाधिकं ब्रह्मण-
श्शुद्धस्यागतमीश! कुत्र समये मायापि सम्मोहिनी ।
प्राप्ता वेत्ति न वेदयन्ति जगत्यप्येतच्छ्रुतिज्ञाः पर-
न्त्वाहुस्सवमनाद्युपाधिरहितं ब्रह्माऽस्ति तत्कुत्र वा ॥५६॥

सर्वोपाधिषु सर्वलोकविततावन्तर्बहिर्व्योमव-
द्ब्रह्मास्ति स्वकसर्वशक्तिकलितं विज्ञानवेद्यं विभु ।
शुद्धं प्राकृतवैकृतादिरहितं चैतन्यरूपं मह-
श्श्रीरामेश वदन्ति तात्त्विकबुधास्तत्त्वां तु मन्यामहे ॥५७॥

तच्चैतन्यमनिन्द्रियाविषयं वाचा न वाच्यं मनोऽ-
नूह्यं निर्वचनाऽशकं श्रुतिगिरामोदक्तयेदन्तया ।
को वेत्तु प्रभवेन्महेश्वर दृढाऽविद्यावृतात्मा जन-
स्सर्वज्ञेह भवत्प्रसादमनवाप्याऽशेषलोकप्रभो! ॥५८॥

निर्वक्तुं यदिहाहमीश भुवने केनापि वा तत्तत-
स्तद्ज्ञातुं प्रयतेत तस्य मुखतो जिज्ञासुलोकश्शिव! ।
यच्चानिर्वचनीयमेतदखिलैः ब्रह्माऽवगन्तुं तु त-
त्सर्वज्ञ त्वदनुग्रहेण तु विना शम्भो कथं शक्नुयात्॥ ५९॥

यच्चाणोरणु यन्महच्च महतश्शब्दाद्यवेद्यं च य-
त्सर्वत्रानुगतं जगत्यपि मनोवेद्यं च नेदन्तया ।
विश्वस्येन्द्रियगोचरस्य यदधिष्ठानं परोक्षस्य च
श्रीरामेश! विभो विना तव कृपां तद्ब्रह्म वेद्यं कथम् ॥६०॥

वेदा एव न वेदयन्त्यविशयं शुद्धात्मतत्त्वं जग-
त्तत्त्वं चेश्वरतत्त्वमीदृगीदृगिति विस्पष्टं तु दिष्टैस्सह ।
सृष्टिं विष्टपसंहृतेः स्थितिलयौ जीवात्मतत्त्वं च वा
श्रीरामेश विना कृपां तव जडा विद्मः कथंन्वञ्जसा ॥६१॥

ज्ञानेन त्वदुपाहितेन विमलेनात्मानमालोडय
न्नज्ञानेन तिरोहितं शिव यथा सूक्ष्मानलं भस्मना ।
वेत्त्येकोऽत्र महामतिस्स्वहृदयान्तस्थं स्वबोधाऽखिलम्
मालिन्यं निजरूपभागविरतानन्दी निवृत्तक्रियः ॥६२॥

ब्रह्मात्मानुभवैकवेद्यमितरोपायैरवेद्यं रसा
आस्वादेन यथा फलाद्यनुगता अन्यानवेद्या इह ।
जायेतानुभवस्स तावकृपालब्धामलज्ञानतो
नो तर्कैर्न च वागमादिपठनैर्मोहापनोदश्शिव ॥६३॥

मोहोऽयं किल जागतो विषयगोऽनादिर्जगत्या सह
प्राप्तो मायिक आत्मनः करणतो ब्रह्मादिकर्पी मुहुः ।
जीवस्येश वराकरूपिण इहाभाष्यो भवेत्कीदृश-
स्यात्सर्वज्ञ भवत्कृपाधिगतविज्ञानैकनाश्यश्शिव ॥६४॥

तत्त्वं ब्रह्मण ईश्वरस्य जगतो जीवस्य कीदृग्भवे-
दित्यालोडनमात्मनौपनिषदाद्युक्त्यन्वितेस्साह्यतः ।
मायामोहनिवर्तकं न भवति प्राज्ञव्रजस्याप्यहो!
श्रीरामेश भवत्कृपामृतरसासेकं विना मुक्तिदम् ॥६५॥

प्रत्यक्षं जगदेतदीदृशमिति ज्ञातुं न शक्नोति य-
स्सोऽप्रत्यक्षपरात्मतत्त्वमखिलं वेत्तुं कथं शक्नुयात् ।
स्वान्तस्थं त्वहमात्मना प्रतिकलं सम्यक्स्फुरन्तं मुहुः
स्वात्मानं स्वयमीदृशोऽहमिति नो वेत्तीश्वरं त्वां कथम् ॥

बीजौघं विविधं विचित्रविविधाकरोद्गमप्रापकम्
सृष्टं केन कथं, कथं परिणतं भिन्नात्मनाऽनेकधा ।
तत्तद्व्यक्तिविचित्ररूपकलनं वेत्तुं न शक्नोति यो
लोकेऽत्यद्भुतसर्वशक्तिकलितं त्वां वेत्ति को वा परम् ॥६७॥

ब्रह्माण्डानि बहूनि वक्ति किल स व्यासोऽद्भुतानि स्वयम्
चेतोवागतिगाकृतीनि परतो भूलोकतोऽसाद्भृशम् ।
सौभाग्येन च सम्पदा च सुखतस्सृष्टानि सन्ति त्वये-
तीशावैमि कथं महामहिमवत्त्वत्कारुणीमन्तरा ॥६८॥

एकस्यापि च वस्तुनो भुवि परीणामं विभिन्नात्मना
सृष्टिं तस्य तथा न वेद य इह प्राज्ञात्ममानी नरः ।
वेत्तुं त्वां यतते समस्तजगतीस्रष्टारमीश त्वहो
मोहात्त्वत्करुणां विना कथमयं त्वां वेदितुं शक्नुयात् ॥

भक्त्या त्वत्पदपद्मचिन्तनपरः कृत्वा शरण्यं दृढम्
त्वामेवात्मनि चेतसा सुभजते सर्वेश्वरं सन्ततम् ।
तस्मिन्नाशु भवान् प्रसद्य दिशति ज्ञानं विमोहापहम्
सर्वज्ञत्वमुपेत्य मुक्त इह स स्यान्नान्यथेति ध्रुवम् ॥७०॥

वेदा यन्मुखनिर्गताः प्रथमतो विश्वाढ्यविज्ञानदाः
रूपैस्स्वैर्यमभिष्टुवन्ति सततं वेदा द्वयोः पार्श्वयोः ।
स्थित्वा वेत्ति च यस्त्रिकालगतमप्येष प्रभो विश्वसृट्
स्वां शम्भो तनयामियेष हि वधूं व्यामुह्य मायाबलात् ॥

वेदान्व्यस्य पराशरस्य तनयः सर्वान्विदित्वा स्वयम्
वेदव्यास इति प्रपञ्चनिचये ख्यातिं गतो मौनिराट् ।
सूत्रैर्योऽभिदधे तदौपनिषदं ब्रह्मात्मतत्त्वं स्फुटम्
पुत्रे मोहमवाप्तवानतितरां तिर्यग्युगावेक्षणात् ॥७२॥

विश्वामित्रपराशरादिमुनयो वेद्यार्थसंवेदिनो
युक्तात्मान उपात्ततीव्रतपसो मोहं गता मायिकम् ।
एवं वैषयिकात्ममोहविवशा लोके महायोगिनोऽ
पीश प्राकृतमोहबन्धभिदुरा त्वेकैव ते कारुणी ॥७३॥

ब्रह्माऽनिर्वचनीयमेव शिव सा मायाप्यशक्या पुनः
निर्वक्तुं जगदप्यनादि विविधाकारं विचित्रक्रियम् ।
जन्मोदीतिलयस्वभावकमिदं प्रावाहिकं नैत्यकम्
दृश्येतेश्वर तावकीनकरुणैवैका विमुक्तिप्रदा ॥७४॥

मायामेव नटीं विधाय भगवंस्त्वं सूत्रधारस्त्वभा-
वपात्राणीह विचित्रकर्मनिवहानास्थाप्य जीवव्रजान् ।
नानारूपधरान्विचित्रफलकव्यापारनिर्वाहिण-
श्शं शोकं कलयन्नहो! नटयसे चित्रं जगन्नाटकम् ॥७५॥

सृष्ट्यङ्के तु रजोगुणाश्रयमजं संस्थाप्य सर्गोचितां
शक्तिं तत्सहकृत्वरीमपि विधायानङ्गमुख्यैर्नटैः ।
शृङ्गारं नटयन्विमोह्य च मिथस्त्रीपुंसरूपं प्रजो-
त्पादाद्यैस्त्रिजगत्सदाशिव सदा संसारयस्यद्भुतम् ॥७६॥

स्थित्यङ्के सकलात्रसानभिनयन्जीवैर्मनुष्यादिभिः
पात्रैर्मोहमुदञ्चयन्प्रकुरुषे सांसारिकं भोगगम् ।
कमक्रोधमुखात्तवैकृतविचित्रातेहपीकाहितै-
श्चित्रैः कर्मभिरीश नतयसि भो सर्वं जगत्सर्वदा ॥७७॥

विष्कम्भा बहवोऽत्र तु प्रतिरसं तत्तत्त्रिवर्गाश्रया-
श्चित्रानेकचरित्रदर्शनपराः केचित्सुखान्ताः परे ।
दुःखान्तास्सुखदुःखमिश्रकृतयस्संसारमोहाश्रिता
नानानायकनायिकालिकलिता दर्श्यन्त ईश त्वया ॥७८॥

अन्योन्याकृतिमुग्धयोस्स्मरशरव्याघातसंरब्धयो-
स्संयोगत्वरमाणमानसगतिप्रक्रान्तबिब्बोकयोः ।
प्राप्तात्मीयरतान्तरायहतयोः पश्चाद्युजाः कामिनोः
शृङ्गारं द्विविधं कथालिकृतं शम्भो क्वचिद्दर्शयेः ॥७९॥

राष्ट्राक्रान्तिनिरीक्षिणोर्निजबलैर्दृप्तात्मनोः क्रुद्धयो-
रल्पेनाऽप्यपराधतो रणयुजोस्सैन्यावलीचोदिनोः ।
राज्ञोश्शस्त्रपरिभ्रमोद्विरदहङ्कारोक्तिवारैर्मिथो
वीरं रङ्गतलेषु दर्शयसि तत्सैन्यावलेश्वेश्वर! ॥८०॥

आधिव्याधिविपद्व्रजप्रतिहतैर्दीनैर्नितान्तं जनै-
रार्तश्शङ्कर दीनरक्षक विभो दीनं भृशं पाहि माम् ।
यातस्त्वां शरणं त्वनन्यगतिकश्शम्भो इति व्याहृतेः
क्षिप्रैतत्परिरक्षणेषु करुणं शम्भो समादर्शयेः ॥८१॥

चापं मेरुगिरिं शरं हरिमुरुं मौर्वीं च तं वासुकिं
तूणीरं जलधिं विधाय रथमप्याधाय विश्वम्भराम् ।
चक्रे भानुविधू हयांश्च निगमानक्षं तु धर्मं प्रभो!
मायावित्रिपुरासुरालिहनने प्रादर्शयस्त्वद्भुतम् ॥८२॥

गङ्गां मूर्ध्नि दधासि वल्लभतया त्वामर्धदेहेन किं
भूतिं वांछसि सर्वदा प्रकृतिजा सर्वस्य सा न प्रिये ।
दिव्यालंकृतिभूषितो हरिरहं त्वत्तो न किं भूषित-
स्त्वेवं नर्मवचस्सुहास्यमुमया सन्दर्शयस्यात्मना ॥८३॥

वैयाघ्रं परिधाय हास्तिनमुपर्याधाय चर्म प्रभो!
फालाग्निं ज्वलयन् रुषा फणिवरैर्हालाहलोद्गारिभिः ।
भस्मच्छन्नवपुस्त्रिशूलमुपयन्नुग्रं करे वेगत-
स्त्वायान्हन्तुमरीन्भयानकरसं शम्भो क्षिपस्याजिषु ॥८४॥

तत्तच्छस्त्रनिकृत्तबाहुशिरसश्छिन्नोरुजानूदरा-
न्निर्यद्रक्तशरीवसादिपिशितच्छेदौघपङ्कस्थितान् ।
शत्रून्वीक्ष्य रणाजिरेषु चतुरङ्गानीकभग्नाङ्ककैः
बीभत्सं रसमाप्नुयान्न पुरुषः कोवात्मना ते शिव ॥८५॥

रक्षोऽसुक्षपणार्थतीक्ष्णहृदयक्षोभोत्थरोषानलो
त्क्षेपोद्रिक्ततृतीयवीक्षणशिखाश्रेण्या दहन्कांश्चन ।
हुङ्कारैश्च परांस्त्रिशूलनिशितक्षेपैः पिनाकेषुभि-
श्चन्यान्घ्नन् लयनेषु दर्शयसि भो रुद्र त्वदीयं रसम् ॥८६॥

भक्तानामभयप्रदानविपदुत्तारात्मरक्षास्वहो
देयादेयविमर्शवर्जमखिलाभीष्टार्थदानेष्वपि ।
वात्सल्यं शिव साध्वसाधुसमतां सन्दर्शयस्यात्मना
मार्कण्डेयदशास्यबाणमुखसद्भक्तेष्विवान्येषु च ॥८७॥

शान्तं सर्वजगत्समावनविधानात्मानुसन्धौ सदा
योगेनाऽविकलेन शिष्यततये विद्योपदेशेष्वलम् ।
जीवब्रह्मविशुद्धतत्त्वविवृतौ दुर्वारमायामहा-
मोहोर्म्युग्रभवार्णवोत्तरणकृद्योगोपदेशेषु च ॥८८॥

संसारे सकलात्रसानभिनयन्सर्वैश्च जीवैर्विभि-
न्नाकारैर्बहुवेषभाषणयुतैर्नानाविधव्याप्रियैः ।
चित्रात्मीयकृतिप्रसूतफलवैचित्र्यानुसन्धायिभि-
र्मायामोहविकारदर्शिभिरहो! सम्भ्रामयेस्सन्ततम् ॥८९॥

कल्पान्ते जगतो लयाय पृथिवीं वायुं च वह्निं जलम्
सूर्यं विष्णुवरूपकानिह विभो संचोद्य रोषाग्निना ।
कालाग्निं ज्वलयन्नुदग्रविविधोत्पातैः क्षणाद्भस्मसा-
त्कुर्वन्सर्ववपूंषि नृत्यसि महारुद्रोग्रकाल्या सह ॥९०॥

अर्कैर्द्वादशभिस्समं समुदितैस्तिग्मांशुभिस्तापय-
न्नत्युग्राग्निशिखाभिरीश परितस्सन्दाहयन्भूतलम् ।
झंझावातयुताऽतिवृष्टिभिरिलामाप्लाव्य चाब्ध्यूर्मिभि-
र्भूकम्पैरशनिव्रजैश्च बहुधा जीवासुहर्ता हर! ॥९१॥

जीवान् स्वप्रकृतौ विलाप्य विपुलं कालं स्वचिच्छक्तियु-
क्स्वानन्दं भजसे तमस्यतितरां यावच्च जीवावलेः ।
कर्माण्यात्मफलानुभावकपरीपाकं व्रजेयुर्विभो
पश्चाद्भूततर्तिं पुनस्सृजसि भो को वेद लीला इमाः ॥९२॥

सृष्टिः पुष्टिरथ प्रणष्टिरिति भोः लोकस्य लीला इमा
आहुर्नित्यश ईश निर्गुण सदानन्दात्मरूपस्य ते ।
संसारोऽतिमहान् सदाऽद्भुततमस्संवीक्ष्यते जागतो
मूढानामिह मादृशां भवगतिस्स्यात्कीदृशी दुस्तरा ॥९३॥

कामक्रोधमुखारिवर्गविजयी वश्यात्ममायस्सदाऽऽ
नन्दी निर्विकृतिर्जगद्विधिफलव्रातानुभावादिषु ।
तत्तज्जीवकृतक्रियाफलततेर्दानेषु सक्तस्सदा
संसारं विदधासि जागतमहो सर्वज्ञ सर्वेश्वर! ॥९४॥

माया तेऽस्तु वशा वशानि करणानीशान सन्त्वंजसा
जन्मव्याधिजरामृतिप्रभवजं दुःखं न जात्वस्तु वा ।
आत्मानन्दमहाविभूतिकलने योगेन शम्भो जग-
त्संसारः प्रतिबन्धको न हि कुतोऽस्त्यापन्नरक्षादिभिः ॥९५॥

गार्भं मार्तमितीह मर्त्यसहजं सन्त्यज्य दुःखद्वयं
संसारे परदुःखहीनमनुजस्सम्राड्दरिद्रोपि वा ।
नो दृश्येत भवत्समग्रकरुणापीयूषभाक्कश्चन
स्याच्चेत्कोटिमितेषु शङ्कर भवेन्मर्त्येषु वाऽन्येषु वा ॥९६॥

सेनानीः द्युसदां तवौरससुतस्कन्दो गणानां पति-
श्चान्यस्तावकसर्वशक्तिकलितौ द्वावर्थदेहे वधूः ।
एका मूर्ध्न्यपरा कुटुम्बमपरं प्राणिप्रपञ्चात्मकम्
भर्तव्यं भवतो भवेऽतिविपुलो रागोऽज्ञहृद्गोचरः ॥९७॥

सर्वाङ्गीणकभूतिधारणमलं वासश्श्मशानावनौ
मुण्डस्रग्धरणं कपालकरता नागालिभूषाकृतिः ।
दिग्वासस्त्वमशेषविष्टपमहासाम्राज्यनाथस्य ते
वैराग्यं भवगाम्यनन्यसदृशं सुव्यंजयन्तीश्वर! ॥९८॥

रागारागयुगं भवे भव तवाऽऽयत्तं तु लोकोत्तरं
मायाया मनसोपि वक्ति वशतां लोकोत्तरामीश्वर ।
संसारे सरतां मनो यदि वशं मायापि सा स्याद्वशा
वश्ये ते यदि पद्मपत्रजलवद्भ्राति तान्नो भवः ॥९९॥

वश्यं यस्य मनो विवेकवशगं वश्यानि सर्वेन्द्रिया
ण्याक्रष्टुं विषयान्न शक्नुयुरपावृत्तात्मवृत्तेस्ततः ।
आनन्दस्सहजस्फुरेद्धृदि न तं लिम्पेत्तु बाह्यं सुखम्
दुःखं वा विषयागतं बधिरजात्यन्धादिवच्छङ्कर ॥१००॥

विद्या सद्गुरुसम्प्रसादसमनुप्राप्ता विवेकं दिशे-
द्धर्मो निष्फलकामनस्सुविहितस्तं वर्धयेच्चेतसः ।
शुद्धिं संविदधच्छमाद्युपहितामन्तर्बहि कल्मषे
निर्णुद्येश्वर निर्मलां त्वयि दृढां भक्तिं दिशेत्तारिकाम् ॥

अज्ञानं विविधं रुणद्धि हृदयं प्रज्ञानमीषच्च नो
विज्ञानं विविधं वशं तव विभो सर्वज्ञ सर्वेश्वर ।
संसाराम्बुधिशोकवीचिवलयभ्रान्तस्य मेऽहर्निशं
भक्तिं चेत्तरणिं ददासि न कदा वा स्यात्कथं निर्वृतिः ॥

ब्रह्मानन्दमहाविभूतिगमकं ज्ञानं प्रभो दुर्लभम्
कामक्रोधमुखारिवश्यविषयव्राताऽतिमुग्धात्मनाम् ।
दूराणां शममुख्यमित्रविततेस्संसारदुर्वासना-
दुष्टानां सततार्थकामसुखसन्धानातुराणां शिव! ॥१०३॥

साङ्गां वेदचतुष्टयीं पठतु वा षड्दर्शनीसंयुतां
वेदान्तानखिलांश्च भाष्यनिवहैः क्रोडैरधीतां बुधः ।
नाऽन्तश्शत्रुहृषीकवर्गविजये किंत्वर्थकामार्जने
साधीतिस्सहकारिणी कथमहो! ज्ञानोदयोऽस्येश्वर ॥१०४॥

अत्युच्चाग्रशिरोगतं फलमिवाधस्थस्य पङ्गोर्यथा
दुष्प्राप्यं भवभोगमुग्धमनसां ज्ञानं परब्रह्मणः ।
कस्मिन्वापि युगे भवत्सुकरुणालब्धात्मतत्त्वाद्विना
घोरे दुर्विषयैकभोगनिरतस्वान्ते कथं स्यात्कलौ ॥१०५॥

श्रीरामेश पुरा श्रितावनपरश्श्रीदक्षिणामूर्त्यभि
ख्याकात्मा वटवृक्षमूलवसतिर्वृद्धात्मशिष्यालये ।
मौनेनैव परात्मतत्त्वमखिलं प्रादर्शयस्सम्यगि
त्याहुस्तत्त्वविदस्तथा यदि कृपा ज्ञानं सुलभ्यं तदा ॥१०६

अस्मिन्नेव कलौ युगे निगमवाक्सिद्धान्तसम्बोधन-
द्वारेणात्मपरात्मतत्त्वगमकं भाष्यं तु शारीरकम् ।
सम्बध्यापि च पद्मपादमुखसच्छात्रेभ्य ईश स्वयम्
श्रीमच्छङ्करदेशिकेन्द्रवपुषा तत्त्वं न वोपादिशः ॥१०७॥

बौद्धादिश्रुतिमार्गरोधिकुमतव्याप्ते धरामण्डले
नष्टप्रायसमस्तधर्मनिवहे श्रीशङ्करावातरः ।
कालेयानि मतानि तान्युपनिषत्तत्त्वान्वयैर्युक्तिभि-
र्वादे खण्डयता त्वया श्रुतिशिरोमार्गस्सुसंस्थापितः ॥१०८

दत्तात्रेयमुखावतारनिवहं स्वीकृत्य नानाकला-
गूढार्थानुपदिष्टवान्करुणया शिष्येभ्य ईशाऽखिलान् ।
वात्सल्यं कियदस्ति ते श्रिततती श्रीजामदग्न्याय त
त्पुत्रेणैव सहाखिलश्रुतिकलाव्याप्तिं स्फुटं वक्ति नः ॥१०९।

संसारे विषयोपभोगविततिप्राप्त्यार्थकामार्जने
संसक्तस्य सदापि धर्ममधरीकृत्य प्रवृत्तस्य मे ।
प्राप्ता दुःखततिर्विरक्तिरपि वा विश्रान्तिरीषच्च न
क्व ज्ञानेऽधिकृतिर्न वाऽनवरता भक्तिश्च का मे गतिः ॥

नाऽऽम्नायोदितकर्मजालमसकृन्नित्यं च नैमित्तिकम्
सश्रद्धं चरितं क्व चेष्टमपि वा पूर्तं जनावत्र मे ।
चेतश्शुद्धिरिहाप्यमुत्र च सुखव्रातस्य भुक्तिश्च वा
शम्भो स्यान्नु कथं विमुक्तिसरणिस्त्वत्यन्तदूरा प्रभो! ॥

कर्माण्याचरितानि वैधविदितस्स्वीयं फलं प्रापय-
न्त्यात्मानं च पुनन्ति कामरहितं वेदोदितानि प्रभो! ।
काम्यान्यल्पनिजाङ्गलोपघटनेऽप्यत्यन्तसोपद्रवा-
ण्याराद्घ्नन्ति च देव! सत्फलगतिर्दूरा विधेर्वैकृतात् ॥११२॥

कर्माण्याचरितुं शरीरकरणार्थाढ्यात्मशक्त्यादिकं
श्रद्धा चापि दृढाऽलसत्वविरहाद्यावश्यकानीश्वर! ।
क्वैतान्यत्र कलावधर्मगमके सर्वांशदौर्बल्यदे
नास्तिक्यप्रबलेऽर्थकामनिरते नृणां घटेरन्प्रभो! ॥११३॥

जातानां मरणं न पश्यति जनः को वा नृणां भूतले
वृद्धिं वा जननं च नित्यश इदं नित्यक्रियाचक्रकम् ।
वीक्ष्यापि स्वकनित्यतां तु मनुते मोहादकृत्येष्वलं
भोगार्थी यतते सदेन्द्रियवशो मर्त्यः कथं निर्वृतिः ॥११४॥

एकां भक्तिमिह स्थिरां त्वयि कलौ संसारसन्तारिका-
माहुर्वृद्धजनास्समस्तसुखदां तापत्रयोन्मूलिनीम् ।
सत्सङ्गाच्चरितश्रुतेस्समुदिता नामानुकीर्तैः स्मृते-
र्मूर्तेस्ते गुणसंस्तुतेर्मनुजपाभ्यर्चादिभिस्सा स्थिरा ॥११५॥

जिह्वा वक्ति सहस्रशः प्रतिदिनं स्वीयार्थकामाश्रयान्
शब्दानैहिककार्यसिद्ध्यनुगुणान्नानाविधान्मे शिव! ।
अत्रामुत्रसुखप्रदानखिलदुष्पापाटवीदाहकान्
शब्दांस्त्वद्गुणनामकीर्तनपरान्नो वक्त्यभीष्टार्थदान् ॥११६॥

श्रोत्राभ्यां परमेश! तावककथा नाकर्णिताऽश्रद्धया
हस्ताभ्यां न शिरोऽभिषेचितमलं शुद्धोदकेन प्रभो! ।
लूनैर्बिल्वदलादिभिस्तव पदद्वन्द्वं न वा पूजितं
पादाभ्यां न गतं त्वदालयपदं शम्भो! कथं निर्वृतिः ॥

अष्टाङ्गैरभिवन्दनं तव पदाम्भोजाय जानामि नो
चेतो जातु न तावकस्मृतिरतं संसारसम्मोहितम् ।
जानामीश भवत्पदाब्जयुगलीसेवां भवोत्तारिकां
तच्छोकानुभवेपि मुञ्चति न मां मोहः पिशाचो यथा ॥

आपत्सु स्मरणं गुणस्तुतिमुखैस्तन्निस्सृतेर्विस्मृतिः
सम्पत्सु स्मरणं न जातु तनुते चौर्यन्त्विदं चेतसः ।
आस्तिक्यं विपदीश सम्पदि पुनर्नास्तिक्यमेतत्कला-
वास्तिक्यं निजकामपूर्तिफलकं शम्भो कथं निर्वृतिः ॥

या विद्या पठिता मया गुरुकृपासाह्येन सा शङ्कराऽ-
श्रान्तं स्वीयकुटुम्बपोषणविधौ पर्यापिताऽभूदहो!
धर्मानुष्ठितये परात्मगतये भक्त्या भवत्सेवने
नैवासीत्सहकारिणी परमघानुष्ठानतोऽवारयत् ॥१२०॥
पापान्याचरितान्युरूणि न मया पुण्यानि वा कानिचि-
न्नित्यानीश! यथाकथञ्चन निमित्तप्राप्तान्यकार्षं विभो!
आस्तिक्यं हृदयेऽस्ति दुर्ग्रहगतेश्चित्तं त्वदाराधने
लग्नं नैव भवेन लम्पटमिहामुत्रापि का मे गतिः ॥१२१॥
ऐश्वर्यं विविधं कलाश्च सकला अज्ञाननिर्मूलकं
विज्ञानं विविधं परात्मविषयं ज्ञानं तु तत्तादृशकम् ।
सर्वाश्शक्तय ईश तेऽतिविवशा नादेयमीषच्च ते
भक्तेभ्यश्शिव मूढधीर्न भजते त्वामाशुसन्तोषिणम् ॥१२२॥
पुष्पैर्बिल्वदलैस्सिताक्षतमुखैर्गन्धादिभिः पूजने
श्रान्तिः काऽमलवारिणाऽभिषवणे मन्त्रानुवादैस्समम् ।
त्वत्पञ्चाक्षरमन्त्रमानसजपे त्वन्मूर्तिसन्दर्शने
त्वन्नामोच्चरणेपि हन्त विमुखं चित्तं कलेः प्राभवात् ॥१२३॥
संसारेऽस्ति कियत्सुखं कियदथो दुःखं च जानेऽखिलं
दुःखान्येव निरन्तराणि सततं भुक्तानि किंचित्सुखम् ।
तच्चापि क्षणिकं तदर्जनकृते दुःखं तु नानाविधं
शम्भो भुज्यत एव किंतु विरतं संसारतो मे न हृत् ॥
ज्ञात्वापीश! भवत्पदाब्जभजनं सर्वार्थसंसाधकं
नासारज्जुविकृष्यमाणवृषवद्व्यामोहपाशैर्दृढम् ।

कष्टस्संसृतिगैश्चरामि सततं खिन्नोऽर्थसंसिद्धये
सापि स्यात्कथमीश! तावककृपापाङ्गप्रसारं विना ॥१२५॥
ये प्राचीनजनिव्रजेऽनितरया भक्त्या समाराध्नुवन्
ध्यानैर्मन्त्रजपैस्तवैरभिषवैरर्चादिभिश्श्रद्धया ।
सर्वैश्वर्ययुता अवाप्य मनुजानन्दैरशेषैर्युताः
प्रज्ञानप्रतिभाञ्चितात्मधिषणा विज्ञानतेजोन्विताः ॥१२६॥
ते त्वामत्र च जन्मनीश्वर भवत्पादारविन्दाश्रयाः
प्राग्जन्मानुगतात्मसंस्कृतिबलादाराध्नुवन्ति प्रभो! ।
धन्या भुक्तिमिहाप्यमुत्र विविधामासाद्य मुक्तिं जना
अन्ते प्राप्नुयुरीश भक्तिबलसम्प्राप्तात्मबोधोदयात् ॥ २७॥
ये च त्वत्पदपद्मभक्तिविमुखास्संसारसेवारता
धर्मं मुक्तिपथं विहाय गिरिजानाथार्थकामाश्रयाः ।
तेषां प्राक्तनपुण्यपाकवशतो भुक्तेरिहाणोर्गता
वप्यामुष्मिकभुक्तिरीश कथमासीदेद्विमुक्तिः कथम् ॥१२८॥
भक्त्या त्वत्पदपद्मचिन्तनपरः कृत्वा शरण्यं दृढं
त्वामेवात्मनि चेतसा सुभजते सर्वेश्वरं सन्ततम् ।
तस्मिन्नाशु भवान्प्रवान्प्रसद्य दिशति ज्ञानं विमोहापहं
सर्वज्ञत्वमुपेत्य मुक्त इह स स्यान्नान्यथेति ध्रुवम् ॥१२९॥
मोहं मे हर संसृतौ हृदयगं तापत्रयं निर्णुदन्
विश्रान्तिं दिश चेतसो जहि रिपूनन्तस्स्थितान् शङ्कर!
भक्तिं मे दिश भुक्तिमुक्तिफलदां नानाविधां सुस्थिरां
मायां मय्यपवर्तयाशु शरणं यातोऽस्मि किंवा दिश ॥

याचे नाहमिदन्तया किमपि यत्सर्वज्ञ मे वेत्सि त-
द्देयं नित्यसुखप्रदं विविधदुस्तापापहं शङ्कर!
भक्तिं त्वत्पदपङ्कयोरविरतामेकां तु याचे सदा
शक्तिं दुर्विषयापवारणपटुं चित्तस्य निग्राहिणीम् ॥१३१॥
त्वन्नामानि गृणन्त्यजस्रमपि मे जिह्वाऽस्तु संशोधिता
श्रोत्रे त्वच्चरितामृताऽऽकलनतस्स्यातां तु पूते सदा ।
नेत्रे तावकदिव्यविग्रहसमालोकैश्च संशोधिते
पाणी भव्यभवत्पदार्चनमुखैस्स्यातां विभो शोधितौ ॥
चित्तं संसरतात्सदापि सकलैस्साकं हृषीकैर्भव-
त्पादाम्भोरुहचिन्तने च मनने नानामहिम्नां तव ।
मूर्धा सांजलिबन्ध ईशमहिमव्रातास्पदत्वत्पद-
द्वन्द्वाम्भोजयुगाभिवन्दनविधौ नम्रस्सदा वर्तताम् ॥१३३॥
माभूद्धर्मपराङ्मुखं मम मनः कालेयदुर्वासना-
ग्रस्तं वा विषयोपभोगनिरतं भूयाद्विवेकाश्रितम् ।
मायामोहमहाहिपाशदृढसम्बद्धं भवाम्भोधिदु-
र्वीचीभूतमहाव्यथाकुलहृदं मामुद्धराश्वीश्वर! ॥१३४॥
श्रीरामेश! भवत्प्रसादवशतः कर्मावनौ भारते
प्राप्तं मानवजन्म दुर्लभतमं तत्रापि विप्रान्वये ।
विद्याप्यागमिकी हिताऽहितपरिज्ञानं च किंचिद्यशो-
प्येतत्सर्वमनर्थकं भवति मे त्वत्सेवनाभावतः ॥१३५॥
तारुण्यं वयसो गतं शिव चतुष्षष्ट्यात्मकं वर्तते
प्राप्तं वार्धकमिन्द्रियेषु पटुता याताऽखिलांगेषु च ।

आधिव्याधिनिपीडितोऽस्मि सततं नैवार्थकामावपि
प्राप्तौ धर्मकथापि नैव कथमुत्तारो भवाम्भोनिधेः ॥१३६॥
व्यग्रोऽहं जनिमृत्युमोहलहरीशोकोग्रवीचीमहा
वेगाघातपरम्परातिभयदे संसारघोराम्बुधौ ।
मग्नश्शङ्कर यापयामि समयं त्वद्भक्तिनौका कदा
लभ्येतेति सुखप्रदा यदि दिशेस्तामत्र शम्भो सुखी १३७॥
दीर्घायुर्दिश मे शरीरपटुतामरोग्यभाग्यान्विता-
माधीन्मे शमयैहिकान्मम मनस्त्वत्सेवनव्यापृतम् ।
पूतत्वद्गुणवर्णनैकनिरतां मत्काव्यकन्यां कुरु
श्रीरामेश विभो त्वदीयकरुणामव्याजतस्सारग ॥१३८॥
मार्कण्डेयमहामुनिप्रभृतयस्त्वद्भक्तिकाष्ठाश्रयाः
श्रीमृत्युंजय मृत्युमेव किल ते जित्वा सदोपासते ।
सर्वज्ञास्सततं यतः पशुपतिस्त्वं कीर्त्यसे संसृतेः
पाशैर्बद्धमवेश मां करुणया त्वव्याजया शङ्कर ॥१३९॥
विश्रान्तिर्मनसः कदापि घटते सांसारिकव्यापृति-
व्राताश्रान्तपरिभ्रमान्न शिव मे शिष्टार्थचिन्ताभरात् ।
ध्याने ते भगवन्मनोजपविधौ मूर्त्यर्चनादौ च वा
कालो मे लगति क्षणोपि न कथं संसारतो निस्सृतिः ॥
भक्तिर्मे त्वयि वर्तते हृदि दृढा श्रद्धापि सांसारिकं
निर्णुद्याखिलतापवर्गममलं ज्ञानं दिशन् संसृतेः ।
बन्धान्मोचयसि त्वमेव शरणीयोऽसीति चाऽथापि मे
दुष्कर्माप्तफलावरोधबलतो नोपासना सिद्ध्यति ॥१४१॥

अव्याजां करुणां प्रसार्य भगवन् दीनं दयालोऽत्र मां
शम्भो! संसृतिसागरोर्म्यभिहतं श्रीरामलिंगेश्वर!
मोहं मेऽपनुदात्मगं भगवतं ज्ञानं दिशाध्यात्मिकं
शम्भो! त्वां शरणं गतोऽस्मि शरणापन्नावनैकव्रत ॥१४२॥
कालेयाखिलकल्मषाक्रमणतो भ्रष्टान् स्वधर्मव्रजात
सर्वाधर्मपरात्मनो नरपतीन्नॄंश्चापि दृष्ट्वा भृशम् ।
धर्माधर्मविदो मनश्शिव न वाचे खिद्यते विप्रैवै-
रव्याजां करुणां प्रसार्य कलिनिग्राहीह धर्मानव ॥१४३॥
संसारोऽयमसार इत्यनुभवैर्जानन्नपि क्लेशकै-
र्नित्यं तैर्बहुरूपकैरुपगतैर्मोहो जहातीह न ।
त्वत्पादाश्रयणं सुखावहमहो प्राप्नोति नो जातुचित्
शम्भोऽव्याजकृपां प्रसार्य भगवन्मां पाहि दीनं विभो॥
घोरे त्वत्र महाकलौ विपदि च ये त्वां स्मरेयुर्जनाः
तान्पापानपि चाशुतोषिपदभाक्त्वं रक्ष कारुण्यतः ।
कालो दूरतरः कलेर्हरिकृपादत्तोऽस्ति कर्मावना
वस्यां वैदिकवर्त्म रक्ष भगवन् श्रीरामलिंगेश्वर ॥१४५॥
ये भक्ता मननेन चात्मसु विमुक्त्यध्वानुसन्दर्शकं
स्तोत्रं तेऽत्रहितात्मभिः पुनरधीयेरन् दृढश्रद्धया ।
ते भक्त्येह भजेयुरीश भवसन्तापापहं त्वां सदा
संसारे सुखिनो विमुक्तिपथगास्त्वत्कारुणीमाप्नुयुः ॥१४६॥
आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजः
कश्यः पुत्र उमामहेश्वरकृती फण्यम्बिकागर्भजः ।

श्रीविद्वत्कविसार्वभौमपदभाक् श्रीरामलिंगेश्वरं
भक्त्याऽनूनवदन्स्तवनेन भगवान्प्रीतोऽखिलार्थप्रदः ॥१४७॥
अभिनवपण्डितराजाद्यभिरूपसभाप्तबिरुदनवरत्नः ।
स उमामहेश्वरसुधीस्तवराजमिमं बभाण त्रिबुधमुदेऽस्तु॥१४८॥

इति श्रीमत्सप्तगोदावरान्तर्गतोभयगोदावरीमध्यस्थ
श्री कोनसीममण्डलमण्डनायमानमुङ्गण्डापरा-
भिधानमुनिखण्डमहाग्रहारवास्तव्य-
'श्री विद्यावाचस्पति, विद्वत्कविरत्न, अभिनवपण्डितराज, महो-
पाध्याय, वैयाकरणकेसरि, धर्मोपन्यासकेसरि' इत्यादि-
विविधबिरुदविभूषित श्री विद्वत्कविसार्वभौम
पुल्योमामहेश्वरकृतिकृतिषु श्रीरामलिंगेश्वर-
स्तवराजस्सम्पूर्णः श्रीशिवपादारविन्द-
समर्पितो विजयतां तमाम् ।

हेमलम्बिमार्गशिरशुक्लदशमीभानुवासरः । दि 1-12-57 ॥